इदं पुस्तकं मुम्बापुर्यां श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारसंस्थाया अवैतनिकमन्त्रिणा जीवनचन्द्र साकरचन्द्र जह्वेरी इत्यनेन "निर्णयसागर-मुद्रणास्पदे" कोलभाटवीथ्यां २६–२८ तमे गृहे रामचन्द्र येसू शेडगेद्वारा मुद्रापितम्।



---



---

Printed by Rāmachandra Yesu Shedge, at the "*Nirnaya-sāgar*" Press, 26-28, Kolbhāt Street, Bombay.
Published for Śetha Devacanda Lālabhāī Jaina Pustakoddhāra Fund, at Śetha Devacanda Lālabhāī Jaina Dharmaśālā (Śrī Ratnasāgara Jaina Boarding House), Badekhān Cakalā, Gopīpurā, Surat, by Jivanchand Sakerchand Javeri, Hon. Secretary.

*S'eṭha Devacanda Lālabhāī Jaina Pustakoddhāra Fund Series: No. 91*

# VAIRĀGYA ŚATAKĀDI GRANTHA-PANCAKAM

## With Notes, Commentary, etc.

| Grantha | Name | Author | Year | Commentary etc. by | Vikram Era | Christian Era | Pages |
|---|---|---|---|---|---|---|---|
| 1 | Vairāgya S'ataka | not available | not available | Guṇavinaya | 1647 | 1591 | 1–33 |
| 2 | Vairāgya Rasāyana | Laxmilābha Gaṇi | do | Not avilable | Not available | | 34–42 |
| 3 | Padmānanda S'ata | S'reṣṭhī Padmānanda | do | nil | nil | | 43–50 |
| 4 | Laghu Ajita S'ānti Stavan | Jina Vallabha Sūri | do | Dharmatilaka | 1322 | 1266 | 51–63 |
| 5 | Dharma S'iks'ā Prakaraṇa | Jina Vallabha Sūri | do | nil | nil | | 64–66 |

Vikrama Era 1997]

Price Re. 1-0-0

[Christian Era 1941

# सटीकवैराग्यशतकादिग्रन्थपञ्चकस्य ग्रन्थानुक्रमः—

जय शान्तिः-श्रीशान्तिः

प्रौढप्रातिभमन्दरेण मथितात् सिद्धान्तदुग्धोदधेः, सद्बोधामृतमाप्य यः सुमनसं चक्रे जनं स्वाश्रितम् ।
दुष्कर्माद्रिभिदैकपेशलतपोवज्रायुधं धारयन्, जीयादेष सुपर्वनाथसमतः श्रीसिद्धिसूरीश्वरः ॥

# किञ्चिद्वक्तव्य ।

शेठ देवचन्द लालभाई जैनपुस्तकोद्धार फंडमांथी, पृथक् पृथक् मुनिवर्योंथी गुम्फित थयेला वैराग्यशतकादि पांच ग्रन्थो;
'सिद्धिदातानी' कृपावडे "ग्रन्थाङ्क ९१" तरीके प्रसिद्ध करवा शक्तिशाली थाउं छुं.

ग्रन्थ अने ग्रन्थकारो सम्बन्धे संशोधक मुनिवर्य श्रीबुद्धिसागर-गणिये विस्तारथी आलेखेलुं होवाथी ते ज वस्तुने फरी मूकवानुं
प्रयोजन देखातुं नथी. संशोधक मुनिराज ए परमप्रभाविक वचनसिद्धपुरुष मुनिराज श्रीमन्मोहनलालजी महाराजश्रीना मुख्य शिष्य
महान् तपस्वी आचार्य श्रीजिनयशःसूरिजी (प्रसिद्ध नाम श्रीजसमुनिजी) महाराज के जेओ त्रेपन ५३ उपवासनी महान् तपस्या करी
प्रभुश्रीमहावीरदेवनी निर्वाणभूमि पावापुरीमां स्वर्गवासी थया हता, तेमना आज्ञानुवर्त्ती अने श्रीमन्मोहनलालजी महाराजना ज शिष्यरत्न
श्रीहेममुनिजी महाराजनां शिष्य स्वर्गीय अनुयोगाचार्य श्रीमत्केशरमुनिजी महाराजना शिष्य छे. एओश्रीये लघुवयमां मात्र दश १०
वर्षनी उमरे मारवाडमां चवां गाममां दीक्षा अंगीकार करी हती. संशोधक लघु वये पण शास्त्रादिपठनमां अति उत्साही अने उद्यमवंत

हरहंमेश म्हारा जोवामां आव्या छे. पोते कदाच लघुअभ्यासी होय तोपण तेओना उत्साहने प्रोत्साहन मळे, अने भविष्यमां आवा पृथक् पृथक् गच्छो अने समुदायोना लघुलघुवयना मुनिमहाराजो पण संशोधनादिकार्यमां प्रेराता रहे एटली ज भावनाथी, 'अङ्क ९०'मो विद्यमान तपगच्छाचार्य श्रीविजयरामचन्द्रसूरि–शिष्य–बालब्रह्मचारी मुनिश्री कनकविजयजी द्वारा, अने आ वैराग्यशतकादि पांच ग्रन्थो श्रीमद्बुद्धिसागरजी गणि द्वारा संशोधन करावया प्रेरायो छुं संशोधक मुनिराजनो उपकार मानीये ए जरूरी छे.

आ पछी प्रसिद्ध थनारा ग्रन्थोमां (१) अभिधानचिंतामणि कोष, निघण्टुशेष, लिंगानुशासन, शब्दभेदप्रकाश, एकाक्षरनाममाला, शिलोंछ (२) जम्बूगुरु गुम्फित जिनशतक अने (३) जैनकुमारसंभव–सटीक प्रेसमां चालु छे. उपरांत (१) प्रमाणनयतत्त्वालोकालंकार रत्नाकरावतारिका टीका, टिप्पण, पंजिकासहित (२) आवश्यकनिर्युक्ति छायासहित (३) श्रीमद् यशोविजयजीकृत अनेकांतविवरण अने (४) आगमोद्धारक आगमव्याख्याप्रज्ञ आचार्यप्रवर श्रीमद् आनन्दसागरसूरीश्वरजीनी देखरेख नीचे दीर्घ खर्चथाळो, शक्य एटलो सम्पूर्ण अने सुन्दर 'प्राकृतकोष' प्रसिद्ध करवा माटे हस्तप्रत तैयार करवानु कार्य चाली रह्यु छे. ए ग्रंथ हवे पछी प्रेसमां मोकलाशे.

टोपीवाला चाल, सॅन्डहर्स्टरोड, मुंबई
सं० १९९७ श्रावणशुद्ध पूर्णिमा
ता० ७ मी ऑगस्ट १९४१ गुरुवार

जीवणचंद साकरचंद जवेरी,
अवैतनिक मंत्री



# श्रेष्ठी देवचन्द लालभाई जव्हेरी.

| | |
|---|---|
| जन्म १९०९ वैक्रमाब्दे | निर्याणम् १९६२ वैक्रमाब्दे |
| कार्तिकशुक्लैकादश्याम् | पौपकृष्णतृतीयायाम् |
| (देवदीपावली—सोमवासरे) | (मकरसङ्क्रान्तिसन्दवासरे) |
| सूर्यपूरे. | मुम्बय्याम्. |

**The Late Sheth Devchand Lalbhai Javeri.**

Born 22nd Nov. 1852 A. D. Surat, Died 13th January 1906 A. D. Bombay.

11-41:-Copies 1500

N. S. P.

नमोऽस्तु श्रमणाय भगवते महावीराय

# समारभ्यतेऽयं सटीकवैराग्यशतकादिग्रन्थपञ्चकस्योपक्रमः ।



**शान्ताय दान्ताय जितेन्द्रियाय, धीराय वीराय मुनीश्वराय ।**

**सच्छास्त्रबोधादिगुणाकराय, भक्त्या नमः श्रीमुनिमोहनाय ॥ १ ॥**

अयि श्रद्धाभरभारितान्तःकरणाः सज्जनाः ! गृह्णन्त्ववलोकयन्तु चैतत् "सटीकवैराग्यशतकादिग्रन्थपञ्चकम्" । अत्र हि सर्वतोऽर्वाग् वैराग्यशतकाख्यं सटीकं ग्रन्थरत्नं मुद्रितमस्ति, यदनुपमां संसारासारतां प्रख्यापयदत्युत्तमवैराग्यरसपोषकत्वेन शताधिकगाथाप्रसितत्वेन च 'वैराग्यशतक'मित्यन्वर्थाभिधानं स्वीयं बिभर्ति । निसर्गतः प्रादुर्भवत्यारेकेयं धीधनानां हृदये, यदुत--क इमेऽस्य ग्रन्थरत्नस्य मूलप्रणेतारः ?, के च इमे वृत्तिकारा ?, इति, तत्र तावत् 'मूलप्रणेतारस्तु पूज्यप्रवराः के ?' इत्यत्रोत्तरप्रदाने नास्ति ममेतिवृत्तानभिज्ञस्य सामर्थ्यम्, तदुपलम्भकसाधनानुपलम्भात् । ज्ञापयिष्यन्तीतिवृत्तज्ञा महानुभावास्तद्वृत्तमित्याशासे ।

वृत्तिकाराश्चास्य प्रसिद्धा एव वन्द्यचरणा विनयगुणैकनिलयाः श्रीमन्तो गुणविनयवाचनाचार्यवर्याः ।

पूज्याश्चेमे स्वजनुषा कदा कं देशं पुरं कुलं चालञ्चक्रुः ?, कदा कुत्र च दीक्षिता बभूवुः ?, कस्य विनेयवराः ?, कदा स्वपादविन्यासेनेमं कुवलयं पावयाञ्चक्रुः ?, कदा चैनां वृत्तिं विरचितवन्तः ?, के के चान्ये ग्रन्था निर्मिता एभिः पूज्यवरैरिति जिज्ञासायां 'कदा स्वजन्मना कं देशादिकमलञ्चक्रुः ?, कदा कुत्र च दीक्षिता अभूव'न्नित्येतज्ज्ञापयितुमसमर्थोऽहं विदुषां पुरः, तत्साधनाभावात् । परं संवत्षोन्दसमुद्रर्षदर्शशिमिते [१६४९] वैक्रमे लाभपुर(लाहोर)पत्तने श्रीजिनसिंहसूरीणां सूरिपदेन सममेषामपि वाचनाचार्यपदं प्रददे× गच्छाधिपैर्युगप्रधानश्रीमज्जिनचन्द्रसूरिवरैरिति सुज्ञातमेवेतिहासविदाम् । कस्यैते विनेयाः ?, कश्चैषां सत्तासमयः ? कमास्या वृत्तेर्निरचनकालः ? इत्याद्यारेकाकदम्बकस्त्वस्या एव वृत्तेः प्रान्तोल्लिखितेन—

"श्रीगुरुखरतरगच्छे, श्रीमज्जिनचन्द्रसूरिराजानाम् । राज्ये विराजमाने, मुनिवार्धिरसेन्दुमित[१६४७]वर्षे ॥ १ ॥
श्रीक्षेमराजाभिधपाठकानां, शिष्या विशिष्य क्षमया क्षमाभाः । क्षमाधराक्षोभ्यविनेयवृन्दाः, श्रीवाचकाः कीर्तिमहीजकन्दाः ॥२॥
प्रमोदमाणिक्यसुनामधेया—स्तेषां च सन्त्यद्भुतभागधेयाः । शास्त्रार्थसर्वस्वकलापविज्ञा, जयन्ति शुभ्रा जयसोमसंज्ञाः ॥ ३ ॥
तेषां शिष्येणेयं, गुणविनयाख्येन निर्ममे व्याख्या । काऽपि यथावृत्तमणु—स्वरितं वैराग्यशतकस्य ॥ ४ ॥"

इत्येतेन पद्यचतुष्केणैव निरस्ता भवति, यतः स्फुटीभवत्यनेन यदुत—शुद्धधर्मोपदेशामृतपानप्रीणिताकव्वरभूपतिभ्य आपादीयाष्टाहिकायां

---

× "तेषु च गणिजयसोमा, रत्ननिधानाश्च पाठका विहिताः । गुणविनयसमयसुन्दर—गणी कृतौ वाचनाचार्यौ ॥ १ ॥" धर्मचन्द्रवंशावली ।

समग्रदेशेऽमारिप्रवर्त्तक–स्तम्भतीर्थीयजलध्यन्तर्वर्षावधिं यावज्जालप्रपातनिवारणेन समस्तजलचरजन्तुजातरक्षाकारके–शत्रुञ्जयादिसमस्ततीर्थ-रक्षणाज्ञापत्र( फुमाण )सम्प्रापके–सम्राड् अकब्बरप्रदत्तयुगप्रधानपदालंकृतश्रीमज्जिनचन्द्रसूरीश्वराणां धर्मसाम्राज्यवर्त्तिनः श्रीमज्जयसोम-

१ “अकबररञ्जनपूर्वं, द्वादश सूबेसु( शुम्बेषु )सर्वदेशेषु। स्फुटतरममारिपटहः, प्रवादितो यैश्च सूरिवरैः॥ १॥”
इति कल्पलताप्रशस्तौ श्रीमत्समयसुन्दरोपाध्यायः।

“शुचिमासे शुचौ पक्षे, प्रसन्नो दिनसप्तकम्। नवमीतो ददौ साहि–रमारिगुणपावनम्॥ १॥
एकादशसु शुम्बेषु, फुरमानानि साहिना। अमारिघोषणां कर्तुं, लेखयित्वाऽर्पितान्यहो!!॥ २॥” कर्मचन्द्रवंशावली।

२ “जला( छहीन )लब्धि श्रीअकबरवितीर्णाषाढीयाष्टाहिकाऽमारि–वर्षावधिश्रीस्तम्भतीर्थीयजलध्यन्तर्वर्तिजलचरजीवततिम(?)रक्षणसमुद्भूतप्रभूतयशःसम्भारसाहि-प्रदत्तयुगप्रधानविरुदधार + + + श्रीजिनचन्द्रसूरिपुरन्दराणाम्” इति पत्तनचित्कोशीयषौषधपदर्विंशिकावृत्तिप्रान्ते।

३ “नाथेनाथ प्रसन्नेन, जैनास्तीर्थास्समेऽपि हि। मन्त्रिसाच्चक्रिरे नूनं, पुण्डरीकाचलादयः॥ १॥” कर्मचन्द्रवंशावली।

४ “संवन्नन्दसमुद्रषट्शशिमिते [१६४९] श्रीफाल्गुने मासि ये, *नप्राकृथी[कृष्ण]दशमीतिथौ[हि विल]सत्पुण्याः सतां नन्दिनः। शाहिदत्तयुगप्रधानविरुदा आनन्दकन्दान्विते, श्रीमच्छ्रीजिनचन्द्रसूरिगुरवो जीवन्तु विश्वे चिरम्॥ १॥”
इति “युगप्रधान श्रीजिनचन्द्रसूरि” नामनि हिन्दी–पुस्तके।

“तत्पट्टानुक्रमतः, श्रीमज्जिनचन्द्रसूरिनामानः। जाता युगप्रधाना, दिल्लीपतिपातिसाहिकृताः॥ १॥” कल्पलताप्रशस्तौ।

* नास्ति प्राक्–पूर्वस्मिन्या निशायाः श्रीः–चन्द्रप्रकाशात्मिका शोभा यत्रैवंविधा कृष्णपक्षीया।

महोपाध्यायाना शिष्यवरा इमे वृत्तिकारपूज्याः, सप्तचत्वारिंशदधिके षोडशे शते च वैक्रमाब्दे विनिर्मितेयं वृत्तिरिति । एतेन सत्ता-समयोऽप्येषां पूज्याना सप्तदशशताब्द्या मध्यकालीनः सुस्पष्ट एव ।

विहायैतां वृत्तिमेते निम्नोल्लिखिताः समुपलभ्यन्तेऽन्येऽपि ग्रन्था श्रीमद्वृत्तिकृत्कृताः ।

१—खण्डप्रशस्तिकाव्यस्य हनुमानकविकृतस्य वृत्तिः, शशिसर्गशरसेन्दु( १६४१ )मिते वैक्रमे सूत्रिता ।

२—रघुवंशकाव्यवृत्तिः‡, विश्वमार्गसंघेर्देजीवनिकायेन्दु( १६४६ )हायने निर्मिता ।

३—नलदमयन्तीकथायाश्चविक्रमभट्टकृतायाष्टीका, तस्मिन्नेवाब्दे( १६४६ )गुम्फिता ।

*४—सम्बोधसप्ततिकावृत्तिः†, शशिशैरजीवनिकायेन्दु( १६५१ )मिते वैक्रमे सन्दृब्धा ।

५—कर्मचन्द्रवंशावल्याः स्वगुरुनिर्मितायाष्टीका, रसबाणदर्शनेन्दु( १६५६ )मिते वैक्रमाब्दे निर्मिता ।

६—विचाररत्नसमहः¶, मुनिबाणरसेन्दु( १६५७ )मितेऽब्दे वैक्रमीये दृब्धः ।

---

‡ जैनग्रन्थावल्यां ११५ तमे पृष्ठेऽस्या गुणविनयकर्तृत्वेनोल्लेखेन प्रामाणिक भ्रामिक वेत्यनुमीयते, जावालिपुर(जालोर)दुर्गे यतिवर्यश्रीपूनमचन्द्रभित्कोषीयप्रतौ कर्तृत्वेनैतेषामेव वृत्तिकृता नामोल्लेखस्य सद्भूतत्वात् ।

† एतदर्थेऽपि 'जैनग्रन्थावल्यां' ११४ तमे पृष्ठे 'दमयन्तीचम्पूवृत्तिर्गुणविनयगणिकृते'त्युल्लिखितं परं प्रामाणिकं भ्रामिकं वाऽनुमीयते, यतोऽस्मत्कृत ग्रन्थसंशोधने कृत-परिश्रमे श्रीमच्चतुरविजयमुनिपुङ्गवे सम्बोधसप्तत्युपोद्घाते जैनग्रन्थावल्यामपि च ११० तमे पृष्ठे टिप्पण्यां एतद्ग्रन्थटीकाकृत्कर्तृत्वेनोल्लिखितम् ।

* मुद्रितपूर्वा एतच्चिह्नाङ्किता ग्रन्था, शेषा अमुद्रिता इति ।

¶ यज्जैनग्रन्थावल्यां १२० तमे पृष्ठे श्रीमज्जयसोममहोपाध्यायानां कृतित्वोल्लेखनमस्य ग्रन्थस्य प्रामाणिकं भ्रामिकं वेत्यनुमीयते, प्राग्यक्तमुनिपुङ्गवैर्जैनग्रन्थावल्या-मपि च २१० तमे पृष्ठे टिप्पण्यां एतद्ग्रन्थवृत्तिकृत्कर्तृत्वेनैवोल्लिखितत्वात् । श्रूयते जैनग्रन्थावलीतो यदुतास्त्यय ग्रन्थो राजनगरे, परं नोपलब्धो गवेषितोऽपि तत्र ।

७–लघुशान्तिस्तववृत्तिः, विक्रमतो नन्दवाणरसशशि( १६५९ )मिते हायने रचिता ।
*८–उत्सूत्रोद्घाटनकुलकखण्डनम्, शररसर्पटशशि( १६६५ )मिते समे वैक्रमीये प्रथितः ।
९–इन्द्रियपराजयशतकवृत्तिः, विक्रमतोऽम्बुधिरसरसशशि( १६६७ )वर्षे प्ररचिता ।
१०–अञ्चलमतस्वरूपचतुष्पदिका, वेदवाद्धिरसशशि( १६७४ )मिते वैक्रमीये समे संसूत्रिता ।
११–लुम्पकमततमोदिनकरचतुष्पदिका, शराम्बुधिरसशशाङ्क( १६७५ )मिते वैक्रमाब्दे सूत्रिता ।
१२–एकपञ्चाशद्विचारसारचतुष्पदिका (गु०) संस्कृतटीकयाऽन्विता, रसगुणितिपर्याप्तिशशाङ्क( १६७६ )मिते विक्रमाब्दे सन्दृब्धा ।
*१३–'सबत्थ'शब्दार्थसमुच्चयः ।
१४–लघ्वजितशान्तिस्तववृत्तिः ।
*१५–कर्मचन्द्रवंशावलीरासकः ।
१६–अञ्जनासुन्दरीसम्बन्धः (गु० ), युगरसदर्शनेन्दु( १६६२ )मिते वैक्रमे गुम्फितः ।
१७–गुणसुन्दरीचतुष्पदिका (गु० ), शरदर्शनरसशशि( १६६५ )मिते विक्रमहायने प्रथिता ।
१८–जिनभद्रीयबृहत्सङ्ग्रहण्याः गौर्जरो बालावबोधः§ ।

§ असम्पूर्णोऽयं ग्रन्थो मुम्बापुरीस्थानन्तनाथजिनालयसत्के चित्कोषेऽस्ति, तत्रैव आरम्भः श्लोकः—
"गिरां देवीं नमस्कृत्य, संस्मृत्य पुरुषोत्तमम् । श्रीपार्श्वं [illegible]र्श्वसान्निध्य-कारिपार्श्वमदोदयम् ॥ १ ॥

भविष्यन्त्यन्येऽप्यनेके ग्रन्था एतद्वृत्तिकृत्कृताः, परं न मे श्रवणगोचरमागताः ।

वृत्तिश्चैषा मन्दधियामप्यत्युपकारिणी, यतो नास्त्यत्र शब्दकाठिन्यं पद्यपाण्डित्यं वा, वर्तते च भाषालालित्यं वाचकानामन्दानन्दसन्दोहजनकं प्रासङ्गिको गद्यपद्योभयात्मकः कथासमूहश्चापूर्ववैराग्यरसोत्पादकः ।

प्राङ्मुद्रितो यद्यप्ययं सटीको ग्रन्थो नव्य(जाम)नगरवास्तव्यसुश्राद्ध–हंसराजात्मजेन पण्डित–हीरालालेन, परश्चाशुद्धिबहुलत्वाद्दुष्प्राप्यत्वाच्च सम्प्रति श्रेष्ठि–देवचन्दलालभाई–जैनपुस्तकोद्धारसंस्थाव्यवस्थापकावैतनिकमन्त्री झवेरी–जीवणचन्दसाकरचन्दद्वारा पुनर्मुद्रणमभुते ।

संशोधने चास्य पुस्तकचतुष्टयं समासादितम् ।

१–तत्राद्यं मोहमयीस्थानन्तनाथजिनालयसत्कचित्कोशीयं, लेखनकालादिसूचनरहितमतीवाशुद्धम् ।

२–द्वितीयमपि तत्रत्यमेव "संवत् १६६२ वर्षे कार्त्तिकवदि षष्ठी भृगु लिखितं" इति लेखकलेखान्वितं, नात्यशुद्धम् ।

---

श्रीजिनदत्तगुरूणां, कल्पतरूणामनन्तकामानाम् । पूर्वं चरणाम्भोजं, हृदयाम्भोजे निवेश्यालिम् ॥ २ ॥
श्रीजिनकुशलमहीनां, कुलमास्ते यस्य सर्वदाऽधीनम् । श्रीधरणेन्द्रं निध्याय, भाग्यैः पद्मावतीजानिम् ॥ ३ ॥
पाठकशिरोमणीनां, गुरुवद्यक्षीणबुद्धिविभवानाम् । श्रीजयसोमगुरूणां, प्रसादमासाद्य सद्यशसाम् ॥ ४ ॥
त्रैलोक्यदीपिकायाः, व्याख्यां वार्त्ताविनोदविख्याताम् । वितनोमि संग्रहिण्याः, श्रीम'द्धर्मविनय'गणिरेषः ॥५॥" पञ्चभि: कुलकम् ।

३–तृतीयं पुना राजनगरस्थ'डहेले'त्याख्याप्रसिद्धभाण्डागारसत्कं, नात्यशुद्धं, लेखकनामादिविरहितमप्यनुमानतो नातिप्राचीनं, सततं साहित्योद्धारैकबद्धकक्ष–झवेरी–श्रीमज्जीवणचन्द साकरचन्दद्वारा सम्प्राप्तम् ।

४–चतुर्थं तु छायापुरीयचित्कोशस्थोपाध्याय–श्रीमद्वीरविजयशास्त्रसंग्रहसत्कं, मुनिवर्य श्रीमन्मङ्गलविजयैः प्रेपितं झवेरी–जीवणचन्द साकरचन्दद्वारैव सम्प्राप्तं, नूतनमपि शुद्धप्रायम् ।

द्वितीयं ग्रन्थरत्नं "वैराग्यरसायनप्रकरणं" (सच्छायं) मुद्रितमस्ति, रचितं त्वेत"लक्ष्मीलाभे"न वरमुनिनेति "रइयं पगरणमेयं, लच्छिलाहेण वरमुणिणा" इत्येतस्यैव प्रकरणस्यान्तिमार्याऽर्द्धेन स्फुटीभवति ।

परमेते किंगच्छीयाः ? केषां सुगुरूणां विनीतविनेयाः ? कं विषयं ग्रामपुरादिकं चालञ्चक्रुः स्वजनुषा ? कतमाब्दं यावत्पावयामासुः श्रमणविहारेणेमां भारतावनिम् ? कदा च विरचयाञ्चक्रुरेतं प्रकरणरत्नं ? कांस्कान् जग्रन्थुरन्यान् ग्रन्थान् ? इत्याद्यारेकाकदम्बकस्य समाधानमाधातुं नालम्भविष्णुरहं, तादृक्सामग्र्यभावात् ।

एकैव प्रतिरस्य 'महावीरग्रन्थमाला–धूलिया'द्वारा मुद्रिता ( सच्छाया ) सम्प्राप्ता, तामेव यथावबोधं विशोध्य मुद्रापितमिदम् ।

चतुर्थं पुनर्वैराग्यैकरसोत्कर्पपोपकत्वेन 'वैराग्यशत'मित्यन्वर्थाभिधानं पद्मानन्दकविना स्वाख्यया गुम्फितं 'पद्मानन्दशत'मित्यभिधया प्रसिद्धं ग्रन्थरत्नमस्ति ।

कवेश्चास्य सत्तासमयादि रचनाकालादयश्चाप्यस्य शतस्य यद्यपि निश्चितं नोपलभ्यं, परं—

"सिक्तः 'श्रीजिनवल्लभ'स्य सुगुरोः शान्तोपदेशामृतैः, श्रीम'न्नागपुरे'चकार सदनं 'श्रीनेमिनाथ'स्य यः ।
श्रेष्ठी 'श्रीधनदेव' इत्यभिधया ख्यातश्च तस्याङ्गजः, 'पद्मानन्दशतं' व्यधत्त सुधियामानन्दसम्पत्तये ॥ २ ॥"

इत्येतद्ग्रन्थोपान्त्यपद्येन प्रकटितं स्वयमेव कविना सुगुरु'श्रीजिनवल्लभसूरि'शान्तोपदेशामृतसिक्तश्रेष्ठि'श्रीधनदेवा'ङ्गजत्वं स्वस्य, 'नागपुरे' (नागोर–मरुधरे) 'श्रीनेमिनाथ'सदनकारकत्वमपि च स्वजनकस्येति ।

'श्रीजिनवल्लभसूरी'णां सत्तासमयः प्रतीत एवेतिहासविदां पट्टावल्यादिना द्वादशशताब्द्या मध्यकालीनो वैक्रमीयः । ततो नायुक्तं स एव समयः 'पद्मानन्द'कवेरपीत्यनुमानकरणम् ।

संशोधनेऽस्य प्रतिद्वयं समासादितं, तत्राद्या तावन्निर्णयसागरमुद्रणालयमुद्रिता काव्यमाला–सप्तमगुच्छकस्था अन्तरन्तत्रुटितपाठा, द्वितीया पुना राजनगरस्थ'डहेले'त्याख्याप्रसिद्धभाण्डागारसत्का, नातिप्राचीना नातिशुद्धाऽपि च ।

चतुर्थे मन्थरत्ने 'लघ्वजितशान्तिस्तवनं' सटीकमस्ति, विषयोऽस्य मुख्यतया भगवतोरजितशान्त्योः स्तवनात्मको नवाऽस्तिस्वरूपप्रतिपादनेनोपदेशात्मकोऽपि च ।

मूलस्यास्य स्तवस्य प्रणेतारः 'सङ्घपट्टक–पिण्डविशुद्धि–पौषधविधिप्रकरण–षडशीति–सूक्ष्मार्थविचारसार्द्धशतका'द्यनल्पग्रन्थसन्दर्भसंसूत्रणे सूत्रधारायमाणाः सुविहितचक्रचूडामणयः कविवृन्दवृन्दारकाः कूर्चपुरीयचैत्यवासपरित्यागपुरस्सरं नवाङ्गवृत्तिकारक

श्रीमदभयदेवसूरीश्वराणामुपसम्पन्नसद्गुरुत्वोपसम्पदत्वेन* शिष्याः† श्रीमज्जिनवल्लभसूरिपादाः। पूज्यानां विशेषत इतिवृत्तज्ञीप्सुभिर्विलोक्या 'अपभ्रंशकाव्यत्रयी'भूमिकादय इति ।

---

* यदुक्तं—"तस्याभयगुरोः पार्श्वा-दुपसम्पत्ततोऽभवत् । जिनवल्लभशिष्योऽथ, सर्वसिद्धान्तपारगः ॥ ४३ ॥
क्रमशोऽभयसूरीणां, पट्टकन्दरकेसरी । जिनवल्लभसूरीन्द्रो, द्रव्यलिङ्गिगजार्दनः ॥ ४४ ॥"
इति खरतरगच्छसुविहितसूरिपरम्पराप्रशस्तौ ।

श्रीमन्तोऽपि च स्वयं—"लोकार्च्यकूर्चपुरगच्छमहाघनोत्थ-मुक्ताफलोज्ज्वलजिनेश्वरसूरिशिष्यः ।
प्राप्तः प्रथां भुवि गणिर्जिनवल्लभोऽत्र, तस्योपसम्पदमवाप्य ततः श्रुतं च ॥ १ ॥"
इति अष्टसप्ततिकायां ( चित्रकूटीयमहावीरप्रासादशिलालेखे ), अपभ्रंशकाव्यत्रयीप्रस्तावनातः समुद्धृतम् ।

तथैव "के वा सद्गुरवोऽत्र चारुचरणाः; श्रीसुश्रुता विश्रुताः" इत्येतत्प्रश्नस्योत्तरे "श्रीमदभयदेवाचार्याः" इति जैनश्रेयस्करमण्डलमहेशानाद्वारा मुद्रिते सटीकस्तोत्ररत्नाकरद्वितीयविभागस्थे प्रश्नोत्तरैकषष्टिशतके ग्रन्थे श्रीमदभयदेवसूरीनेव सद्गुरुत्वेनोचुः । यथोक्तं तत्रैव पूर्वपद्ये "ब्रूहि श्रीजिनवल्लभ ! स्तुतिपदं; कीदृग्विधाः के सताम् ?" इति प्रश्नस्योत्तरे "सद्गुरवो जिनेश्वरसूरयः" इति, तथा अष्टसप्ततिकायां "जिनेश्वरसूरिशिष्यः" इति च, तत्तु नह्युपसम्पन्नोपसम्पदत्वे सद्गुरुत्वं, किन्तु स्वं गार्हस्थ्यात्समुद्धृत्य धर्मबोधं ज्ञानादिगुणोत्कर्षं च सम्प्रापकत्वादुपकारं संस्मरद्भिर्धौत्यवासित्वगुरुत्वमधिकृत्य तेभ्यः सतां स्तुतिपदत्वमुक्तम् । तत्तूचितमेव । यतो नाभूवंस्ते पूज्या अद्यकालीनमनुजा इव कृतोपकारिण उपकारस्यास्मर्तारः कृतघ्नाः, किन्तु शिष्टाः, तथैव पददीतिवृत्तौ वर्णितत्वात् । तथाहि—"न चायमाचार्यो न शिष्टः" इति श्रीमन्मलयगिरयः, तथा "शिष्टश्चायमाप्याचार्यः" इति श्रीमद्धरिभद्रसूरयो युगमुनिरुद्रशशाङ्कभू(११७२)नर्पभाविनः ।

† "देवसूरि पहु नेमिचंदु बहुगुणिहिं पसिद्धउ । उज्जोयणु तह वद्धमाणु, खरतरवर लद्धउ ।

विनिर्मिताऽस्य वृत्तिः सद्दृष्टक–पञ्चलिङ्गीवृत्त्यादिविविधग्रन्थनिर्मातृवार्किकचूडामणिश्रीजिनपतिसूरिशिष्यश्रीजिनेश्वरसूरिविनेयवरेण श्रीधर्मतिलकमुनिना नेत्रकरेशिखीन्दु( १३२१ )मिते वैक्रमाब्दे । संशोधिता च वृत्तिकृत्सतीर्थ्यैरेव जिनेश्वरसूरीय'श्रावकधर्मप्रकरण-वृत्ति'विधायकैः श्रीलक्ष्मीतिलकोपाध्यायैरिति निगदितं—

"तैः श्रीलक्ष्मीतिलको–पाध्यायैः परोपकृतिदक्षैः । विद्वद्भिर्वृत्तिरियं, समशोधितरां प्रयत्नेन ॥ ४ ॥"

अनेन प्रशस्तिगतपद्येन वृत्तिकृता स्वयमेव । संशोधनेऽस्यायात्तं प्रतिद्वयं, तत्राद्या श्रेष्ठि–देवचन्द्रलालभाई–जैनपुस्तकोद्धारसंस्था-व्यवस्थापकैः कारापिता मुद्रणयोग्या प्रतिः, या हि वि० संवत् १५८७ वर्षे लिखितायाः कस्याश्चित्प्रत्या आधारेण कारापिताऽऽसीत्, कापडीयेत्युपाह्व–प्रोफेसर–हीरालालरसिकदासविहितया मूलमात्रस्य संस्कृतच्छायायाऽन्विता नात्यशुद्धा। द्वितीया सूर्यपुरस्थजैनानन्दपुस्तका-

---

सुगुरु जिनेसरसूरि नियमि जिणचंदु सुसंजमि । अभयदेउ सव्वंगु नाणि जिणवल्लहु आगमि ।
जिणदत्तसूरि ठिउ पट्टि तहि जिण उज्जोइउ जिणवयणु । सायरहिं परिक्खिलवि परियरिउ मुत्ति जांव रयणु ॥ ४ ॥"

इति कविपाल्हरचितावल्याम् संवत् ११७० वर्षे पाटनगरीलिखितायाम् ।

"तच्छिष्यो जिनवल्लभः प्रभुरभूद्विश्वम्भराभामिनी–भालन्यालदलामकोमलयशःस्तोमः शमारामभूः" इति जयन्तविजयग्रन्थप्रान्ते ।
"आकर्ण्याभयदेवसूरिसुगुरोः सिद्धान्ततत्त्वामृतं, येनाज्ञायि न सङ्गतो जिनगृहे वासो यतीनामिति ।
तं त्यक्त्वा गृहमेधिगेहवसतिर्निर्दूषणा शिश्रिये, सूरिः श्रीजिनवल्लभोऽभवदसौ विख्यातकीर्तिस्ततः ॥ १ ॥"

इति पूर्णभद्रीयशालिभद्रचरित्रान्ते ।

लयसत्का नात्यशुद्धा नातिप्राचीनाऽपि च । तृतीया तु विक्रमपुरस्थश्रीमज्जिनकृपाचन्द्रसूरिभाण्डागारसत्का, साहित्यसेवारसिक—विविधे-तिहासान्वेपक—लेखक—श्रीमान्—अगरचन्दजीनाहटामहाशयसम्प्रेपित'**सटीकसप्तस्मरण**'प्रत्यन्तर्गता शुद्धप्राया ।

अस्त्यस्याः प्रतिकृतेः प्रान्ते "**संवत् १३२२ वर्षे, फाल्गुन सुदि ६, कृता वृत्तिरियं वाचनाचार्य-श्रीधर्मतिलक-गणिभिः । समाप्तमिति । शुभं भवतु**" इति लेखः । अनेन स्वाभाविकमेव भवति वृत्तेरस्या रचनलेखनकालयोरैकत्वानुमानमदीर्घदर्शिनाम्, परं न तत्सङ्गतं यतो लिखिता वर्त्तते तस्यामेव प्रतौ दादा—श्रीजिनदत्तसूरिविनिर्मितस्य गणधरदेवस्तुत्यादिस्मरणत्रिकस्य वृत्तिर्जयसागरोपाध्यायसन्दृब्धा । जयसागरोपाध्यायास्तु वैक्रमीयपाश्चात्यपञ्चदशशतकादारभ्य षोडशशतकप्रारम्भं* यावद्विद्यमानसत्ताका इत्यन्यान्याभ्यस्तत्कृतिभ्यो निश्चीयतेऽतस्तत्पाश्चात्य एव काले लिखितैषा प्रतिरिति स्फुटमेव । प्राङ्निर्दिष्टलेखस्तु वृत्तेरस्या रचनाकालसूचनायैव लेखकेन लिखितस्सम्भाव्यते ।

पञ्चमं त्वत्र विविधच्छन्दोऽलङ्कारसारादिकाव्यभूपाभूपितं चत्वारिंशत्पद्यात्मकं '**धर्मशिक्षाप्रकरणं**' विन्यस्तम् । प्रणेतारस्त्वस्यापि त एव वन्द्यचणाः कविचक्रशक्रा नवाङ्गवृत्तिविधायकश्री**मदभयदेवसूरि**पट्टपूर्वाचलार्यमणः श्रीमन्तो **जिनवल्लभसूरि**मिश्राः । विषयोऽप्यस्य प्रत्यधिकारं पद्यद्वयनिबद्धश्चैत्यभक्तितपस्सक्त्याद्यष्टादशाधिकारेष्वौपदेशिक एव । विदुषां चेतश्चमत्कारकरी रचनाऽस्य प्रकरणस्य, नाना छन्दोऽलङ्कारशब्दलालित्यार्थप्रथनपाण्डित्यादिगुणैः पूर्णत्वात् ।

---

* "श्रीजयसागरगणिना, तेन मया वाचकेन शुचिवाच्यम् । पृथ्वीचन्द्रचरित्रं, विरचितमुचितप्रविस्तारम् ॥ ६ ॥
श्रीप्रह्लादनपुरनगरे, त्रिबिन्दुतिथि( १५०३ )वत्सरे कृतो ग्रन्थः । माढूश्रावकवसतौ, समाधिसन्तोपयोगेन ॥ ७ ॥"
इति पृथ्वीचन्द्रचरित्रे ।

अस्य स्वैकैव प्रतिकृतिः पिचुमन्दपुरी( लीम्बडी )स्थ( आणंदजी–कल्याणजीत्याख्यया प्रसिद्ध )श्रीसङ्घसत्कचित्कोशीया झवेरी–जीवणचन्द साकरचन्दद्वारा सम्प्राप्ता ।

एव पञ्चानामपि ग्रन्थाना क्रमशः प्रतिचतुष्टयैकद्वयत्रयैकाधारेण कृतेऽप्यायासे सशोधनकर्मणि छाद्मस्थ्यसुलभा दृष्टि–मुद्रण दोषजा प्रमादजा वा याः काश्चन स्खलना जाता भवेयुस्ताः सम्मार्जनीया निसर्गतोऽनुग्रहपरान्तःकरणैः सहृदयैरित्यभ्यर्थ्यते ।

संवत् १९९८, वै० शु० ११, श्रीमहावीरचैत्यनिश्रिते
मण्डोवर–खरतरगच्छोपाश्रये
मुम्बापुर्याम्

प्रवचनप्रभावक–श्रीमन्मोहनमुनीश्वरप्रशिष्यरत्नस्वर्गीयानुयोगाचार्य–
श्रीमत्केशरमुनिजीगणिवरान्तिपद्‌ः
बुद्धिसागरो गणिः

संवर्द्दष्टनंधाङ्केन्दु ( १९९८ )—मिते विक्रमहायने । शुके त्रयोदशीघस्रे, माधवस्य सिते दले ॥ १ ॥
मुम्बय्याख्यमहापुर्यां, श्रीवीरचैत्यनिश्रिते । उपाश्रये सुरम्ये तु, श्रीखरतरसंज्ञिते ॥ २ ॥
श्रीमोहनमुनीशानां, प्रशिष्यशिष्यकेण हि । यशः–केशरपादाब्ज–द्विरेफेणाल्पबुद्धिना ॥ ३ ॥
जिनर्द्धिरत्नसूरीणां, छत्रच्छायासु तिष्ठता । उपक्रमोऽयं सन्दृब्धो, गणिना बुद्धिसिन्धुना ॥ ४ ॥

( चतुर्भिः कलापकम् )

उज्जित–सेल–सिहरे, दीक्खा–नाणं–निसीहिआ जस्स;
तं धम्म–चक्कवर्त्ति, अरिट्ठ–नेमिं नमंसामि. [आर्या]

जेना दर्शीत देवना न्हवणथी नाठी जरा–यादवी, जेना मातली–सारथी रथ–तणी फेरी सुरक्षा करी;
जेणे नाजुक नार राजुल तजी वैराग्यना रंगथी, एवा श्रीजगदीश नेमिजिनने वंदुं सदा आदरी ॥ १ ॥
श्रीहंसविजयजी

## शेठ देवचंद लालभाई जैन पुस्तकोद्धार फंडना उद्भवनो इतिहास.

जेमनी स्मृतिने अर्थे आ फंड स्थापवामां आव्युं छे ते शेठ देवचंद लालभाई झवेरीए पोताना मृत्युपत्रमां रू० १००००० (एक लाख)नी रकम विलथी जाहेर करी निराळी तपशील मुजब नीचे प्रमाणे शुभकार्योमां खर्चवा माटे पोताना ट्रस्टीओने फरमाव्युं हतुं.

२०००० जूनां दहेरासरोनो जीर्णोद्धार करवामां. (आ रकम शेठ आणंदजी कल्याणजीनी पेढी मारफते, ए पेढीनी पण एटली ज रकम उमेरावीने, राणकपुरजीना धन्नाशाह पोरवाडना जगप्रसिद्ध 'त्रैलोक्यदीपक' दहेरासरना जीर्णोद्धारमां शेठ देवचंदना ट्रस्टीओए भाईश्री गुलाबचंदनी देखरेख नीचे खरचेल छे. वि० सं० १९७१।७२ लगभग.)

५००० पांजरापोळ सुरत अने बीजे. (सुरतनी पांजरापोळमां अपाई.)

२५००० वाडी करवा माटी छे तेनी धर्मशाला करवी. (सुरतमा शेठ देवचदे रू० २०००० (वीस हजार) खरची मकान सहित वाडी बांधवा माटी हती तेमा २५००० (पचीश हजार) उमेरी धर्मशाला स्थापी, जेथी धर्मशालामां कुले रू० ४५००० (पिस्तालीश हजार)नी रकम वपराई.)*

५००० केशर अने बरासमा. (आ रकम शेठ चेलाभाई लालभाई झवेरी केशर बरास फंडमां अपाई छे.)

शेठ देवचंद उपर मुजब रू० ५५००० (पचावन हजार) खरचवानी यादि लखी शक्या हता, अने रू० १००००० (एक लाख)माथी रू० ४५००० (पिस्तालीश हजार) शेमां खरचया फरमावबुं ते विचार करी लखवाना हता. परंतु पोताना अवसान–काल पूर्वे ए यादि पूर्ण करी शकाई नहि, जेथी रू० ४५००० (पिस्तालीश हजार)नी रकम नाम–निर्देश विनानी शुभकार्यमां खरचवानी बाकी रही. ए रू० ४५००० (पिस्तालीश हजार)नी रकम शुभकार्योंमा खरचवानी शेठ देवचंदना सुपुत्र शा० गुलाबचंदनी कायदेसर रजा मळया उपरात, शा० गुलाबचंद देवचंदे पोताना तरफथी मर्हूमनी यादगीरी माटे शुभकार्यमा खरचवा काढेला रू० २५०००

* शेठ देवचदनो आशय रू० वीस हजार खरचेला हता तेमां रू० पाच हजार उमेरी रू० पचीश हजारनी धर्मशाला करवानो हतो. पण कानून प्रमाणे विलनो अर्थ एवो थयो के "शेठ देवचद गमे एटली रकम खरची गया होय ते विलमां या निराळा दस्तावेजपत्रमां ए मुजबनुं स्पष्ट करेलु न होवाथी ए खरचेल रकम गणवानी नहि, पण तेमां रू० पचीश हजार ट्रस्टीओए वधारे आपी ते वाडीनी धर्मशाला करवी."

आ धर्मशालानो धर्मशाला तरीके लाभ लेवाओ न होवाथी शा० गुलाबचदे कोर्टनी रजा मेळवी धर्मशालाने 'श्रीरत्नसागरजी जैन बोर्डीग हाउस' तरीके फेरवी. विद्यार्थीओ आजे एनो सुंदर लाभ लई रह्या छे.

(पचीश हजार) पण आ रकममां उमेरी महूंम शेठ देवचंदना नामनुं एक स्थायी फंड स्थापवा सूचव्युं. आथी रू० २५०००
(पचीश हजार)नी रकमने रू० ४५००० (पिस्तालीश हजार)नी रकम साथे उमेरी रू० ७०००० (सित्तेर हजार) संगीन फंड
स्थापवा माटे शेठ देवचंदना विलना ट्रस्टीओद्वारा जुदा राखवामां आव्या.*

आचार्य महाराज १००८ श्रीमद् आनन्दसागर सूरीश्वरजी (ते समये पन्यास पदे)नी सलाह अने उपदेशथी तथा शा. गुलाबचंद
देवचंद झवेरीनी सम्मतिथी, आ एकत्र रकमोनुं महूंम शेठ देवचंदनी यादगीरी माटे "शेठ देवचंद लालभाई जैन पुस्तकोद्धार फंड"
नामनुं आ ट्रस्ट शेठ देवचंदना मृत्युपत्रना ट्रस्टीयो (१) शेठ नगीनभाई घेलाभाई, (२) शेठ केशरीचंद रूपचंद, (३) शा. जीवणचंद
साकरचंद अने (४) बाई बीजकोरे (शेठ देवचंदनी पुत्री) ईस्वी सन् १९०९मां स्थाप्युं. तेमज योग्य व्यवस्था जळवाई रहेवा माटे
(१) शेठ नगीनभाई घेलाभाई, (२) शेठ केशरीचंद रूपचंद, (३) शा० जीवणचंद साकरचंद, (४) शा० गुलाबचंद देवचंद,
(५) शेठ फुलचंद कस्तूरचंद, अने (६) शा० मंछुभाई साकरचंदने ट्रस्टीओ निमी ट्रस्टडीड करावयामां आव्युं.

---

* शेठ देवचंदनो आशय विलमां लख्या मुजब लाख रू० पूरा खरचवानो हतो परंतु "जुदी जणावेली यादि प्रमाणे ते ते खाताओमां खरचवा" तेम विलमां दर्शावेलुं हतुं, ज्यारे जुदा तपशीलपत्रकमां पोते मात्र रू० पंचावन हजारनी रकमनी यादि लखी शक्या अने रू० पिस्तालीश हजारनी यादि
पूरी करी शक्या नहि. आथी कायदेसर एवो अर्थ नीकळ्यो के "विल करती वखते रू० एक लाख खरचवानी इच्छा हशे, परंतु तपशील लखती वखते
रू० पंचावन हजार ज खरचवानी इच्छा नियत स्थलोसर नक्की होई रू० पिस्तालीश हजार नहि खरचवा माटे ज तपशीलपत्रकमां नोंध्या नहि होय, तेथी
ए रकमनो मालिक दत्तक पुत्र गुलाबचंद ज रहेशे. ट्रस्टीओने पोतानी मरजीथी शुभकामोमां ए रू० पिस्तालीश हजार खरची नांखवानी सत्ता नथी. पण जो
वारस गुलाबचंद ए रकमनो मालिक पोते न थतां ए खरचवा माटे ट्रस्टीओने सम्मति आपे तो तेनी मरजी मुजब ट्रस्टीओने ए रकम खरचवाने सत्ता प्राप्त
ाय छे." भाई श्री गुलाबचंदनी इच्छा ए रकम पोते लेवानी नहोती तेथी तेनी सम्मति मळवाथी ज आ फंडनी स्थापना थई शकी.

मर्हूम शेठनी दीकरी, शेठना मृत्युपत्रनी एक वहीवटकार (एक्झिक्युट्रिक्स), मर्हूम शा० मूलचंद नगीनदास झवेरीनी विधवा बाई बीजकोरनी, रू० २५००० (पचीश हजार) उपरांतनी रकमनी आखी मिल्कत बाई बीजकोरना मृत्युपत्रना ट्रस्टीयो तरफथी, ईस्वी सन् १९११ना एक दस्तावेजद्वारा भेट मळवाथी, तथा मर्हूम शेठना भत्रीजा अने फंडना मुख्य ट्रस्टी मर्हूम शेठ नगीनभाई घेलाभाई झवेरीना मृत्युपत्रनी रूये रू० २००० (बे हजार)नी रकम तेमना ट्रस्टी अने वहीवटकार (एक्झिक्युट्रिक्स) 'बाई चंदन उर्फे लीलावती' तरफथी ईस्वी सन् १९२२मां भेट मळवाथी तथा परचुरण व्याजनी रकमो मळवा-वधवाथी फंडनुं भंडोळ रू० ११०००० (एक लाख दश हजार)ना आशरानुं थयुं छे.

फंडनो उद्देश "जैन श्वेतांबर मूर्त्तिपूजक धार्मिक साहित्यनी, जेवुं के प्राकृत, मागधी, संस्कृत, गुजराती, अंग्रेजी वगेरे भाषामां लखायेलां छपायेलां प्राचीन पुस्तको, काव्यो, निबन्धो, लेखो वगेरेनी जाळवणी, खीलवणी, पुनरुज्जीवन, रक्षण अने अभिवृद्धि करवानो" छे. प्राचीनतानी हद विक्रम सं० १९५० पूर्वेनी राखेली अने मुद्रित ग्रन्थ माटे थयेला खर्च करतां अडधी किम्मते ते वेचाशे एवुं ट्रस्ट-डीडमां ठरावयामां आव्युं छे.

शेठ केशरीचंद रूपचंद सने १९१६मां ट्रस्टीपदेथी मुक्त थया, अने शेठ नगीनभाई घेलाभाई सं० १९७८,—ईस्वी सन् १९२१मां देहमुक्त थवाथी तेमना स्थाने शेठ अमरचंद कल्याणचंद अने शेठ नेमचंद अभेचंद जे. पी. ने सने १९२६मां ट्रस्टी नियमवामां आव्या. भाई श्री गुलाबचंद देवचंद सं० १९८३,—सन् १९२७मां देहमुक्त थवाथी, तथा शेठ फूलचंद कस्तूरचंदना सने १९२८ना राजीनामाथी तेमना स्थाने शा० नेमचंद गुलाबचंद देवचंद अने शेठ हीराभाई मंछुभाईनुं सने '१९२९मां ट्रस्टी तरीके सचरण करवामां आव्युं, अने ए चारे नवा ट्रस्टीओनुं सने १९२९मां निमणुकखत (एपोइंटमेंट-डीड) करावी लेवडाव्युं.

शेठ अमरचंद कल्याणचंदना सने १९३२मां थयेला अवसानथी, शेठ साकरचंद खुशालचंदने सने १९३६मां ट्रस्टी-पदे संवरवामां आव्या, अने सने १९३६मां ते बाबतनुं निमणूकखत ( एपोइंटमेंट—डीड ) करावचामां आव्युं.

सने १९३७मां में ट्रस्टीपदनुं राजीनामुं आप्युं; अने अमुक समय बाद ट्रस्टीमंडले मारुं राजीनामुं स्वीकारी मने ट्रस्टीपदथी मुक्त करी मंत्री तरीके नीम्यो.

फंडनी शरूआतथी फंडनुं भंडोळ सं० १९९२ सुधी गवर्नमेंट सिक्युरिटिमां रोकवामां आवेलुं हतुं. सं० १९९२मां मुंबई बहार—कोट कालबादेवी रोड उपर फंडने वधु उत्पन्न करवा माटे स्थावर मकान खरीदवामां आव्युं त्यारथी फंडनुं सघलुं भंडोळ ते स्थावर मिल्कतमां रोकायेलुं छे.

फंडनी ए स्थावर मिल्कत उपर आ मुजब नामो अंकित करायां छेः—

मिल्कतनी मालिकी—सूचक ]

“शेठ देवचंद लालभाई जैन पुस्तकोद्धार फंड मिल्कत ( सुरत )”

मिल्कतनुं नाम—सूचक ]

“आगमोद्धारक”

छेल्ला पाच छ वर्षथी फड तरफथी आगळ जेटला वधु प्रमाणमा पुस्तको प्रसिद्ध न थवानु कारण ए हतु के ए समय दरमियान फड पासे पूरती रोकड रकमनो अभाव हतो ते पहेलाना वर्षोमा आगळ करता वधु रकम खरचाई गयेली, अने निर्दिष्ट वर्षो दरमियान वेचवाना पुस्तकोनु भडोळ घणु वधी गयु होई पुस्तकना वेचाणमाथी थती आवक पण आगळ करता बहु ओछी थई गई हती आथी थोडो समय पुस्तकप्रकाशननु काम मुलतवी राखवु आवश्यक थई पड्यु हतु त्रणे वर्ष व्याजनी रकम भेगी थवा देवामा अने पुस्तकोनो स्टॉक वेचवामा गया

आ पछी ट्रस्टीओए फडनु आशरे रू० एक लाख दश हजारनु थवा जतु आखु भडोळ वधारे उत्तममाटे सिक्युरिटिमाथी छूटु करी उपरोक्त मकानमा रोक्यु ते पछी एकाद वर्षे मकाननी आवक एकत्र थवा माडी

आ रीते पैसानी छूट थता पुस्तकप्रकाशननु कार्य हवे फरी हाथमा लेवामा आव्यु छे जो विक्रय प्रमाणमा ठीक चालु रहेशे तो पुस्तको मोटा प्रमाणमा प्रसिद्ध करवानु अमारे माटे वधु सुगम बनशे जैनसमुदाय आ वात लक्ष पर लई घणे पटला पुस्तको खरीदी ज्ञानप्रभावनाना कार्यने उत्तेजन आपशे, एवी आशा राखु छु

मुबाई ता० ७ ऑगस्ट, १९४१ गुरुवार.
वि० स० १९९७, श्रावण शुद्ध नारियेळी–पूर्णिमा.

जीवणचंद साकरचंद जवेरी
अवैतनिक मन्त्री

# A Brief Account of the Fund

I find some people anxious to know something more about Śeṭha Devacanda Lālabhāī Jaina Pustakoddhāra Fund than they do at present. Hence I give here a brief account as to how it was incorporated, and a very brief note as regards its inner machinery since then up to date.

Śeṭha Devcanda Lālabhāī, to commemorate whose memory this Fund was established, directed in his will that a sum of Rupees one-lac be used in charity. Out of Rupees one-lack, he had made up his mind for the following sums only.

(1) Rs. 20000 towards reparation of old delapidated Jaina temples.

(2) Rs. 5000 towards *pinjarapoles* at Surat and other places.

(3) Rs. 25000 to be utilised for building a *dharmaśālā* in place of a proposed bungalow in a compound owned by the donor in Surat, and then under construction.

(4) Rs. 5000 to be spent towards providing saffron and camphor (*barāsa*) to Jaina temples.

The above sums totalling Rs. 55000 mentioned in the will were respectively utilised in the following manner:

(1) This sum was spent after reparation of the well-known Jaina temple at Rāṇakapura through
Śetha Āṇandajī Kalyāṇajī firm, under the supervision of the late Gulābacanda Devacanda. The Āṇandajī
Kalyāṇajī firm contributed an equal sum towards this undertaking

(2) This sum was handed over to the Surat Pinjarapole

(3) The late donor had already spent Rs 20000 after a compound for a bungalow with a garden,
which was then under construction. The sum of Rs 25000 was added to it, and a *dharmaśālā* was
built therein[1]

(4) This sum was donated to Śeṭha Ghelābhāī Lālabhāī Jaina Kesara-Barāsa Fund

The donor had not decided how to spend the remaining Rs 45000, and expired before giving
any instructions as to this sum. The court interpreted this fact in a rather curious way. 'The donor,
when he prepared the will, might have intended to spend the entire sum of Rs one-lac in charity. But
the fact that he has not mentioned as to the disposal of more than the said Rs 55000 means that he might

1 The donor intended to add a sum of only Rs 5000 to the sum he had already spent, that is, Rs. 25000 was
the entire sum he intended to spend after the *dharmaśālā*. But according to the court-interpretation the words meant
a fresh sum of Rs 25000 and hence Rs 25000 more had to be spent after the *dharmaśālā* building

have changed his intention at the last moment. Hence the surplus sum of Rs. 45000 must go to his adopted son Gulābacanda. If, however, the heir Mr. Gulābacanda wants to spend that sum in his father's charities, he is at liberty to do so.' Late Gulābacanda, a worthy son of the donor, asked the trustees of the will of the late donor to spend that sum in some charitable work, and added a sum of Rs. 25000 to it in memory of the revered father. He further instructed the said trustees that they should spend the totalling sum towards some charitable concern which was permanent.

Pūjyapāda Āgamoddhāraka *Acārya* (then *pannyāsa*) Ānandasāgara advised the trustees of the will of the late donor, (1) Śeṭha Nagīnabhāī Ghelābhāī, (2) Śeṭha Keśarīcanda Rūpacanda, (3) Mr. Jivaṇacanda Sākaracanda, and (4) Mrs. Vījakora Mūlacanda (daughter of the late donor) to spend the sum in establishing a *pustakoddhāra* fund, and Gulābacanda gave his sanction for the same. Hence the present Fund was established. The following were its original trustees: (1) Śeṭha Nagīnabhāī Ghelābhāī, (2) Śeṭha Keśarīcanda Rūpacanda, (3) Mr. Jivaṇacanda Sākaracanda, (4) Mr. Gulābacanda Devacanda, (5) Śeṭha Fūlacanda Kasturacanda, (6) Mr. Manchubhāī Sākaracanda.

Mrs. Vījakora, widow of the late Mūlacanda Nagīnadāsa Jhaverī, daughter of the late donor and executrix of his will, donated a sum of more than Rs. 25000, her entire estate, to the Fund at her

death This sum was handed over to the Fund in 1911 Similarly one of the chief trustees of the Fund and a nephew of the late donor, Naginabhāī Ghelābhāī donated a sum of Rs 2000 to the Fund, at his death in 1921, which was handed over to the trustees in 1922 These two donations and sundry interests etc. added to the main sum have amounted to about one-lac and ten-thousand Rupees

The aim of this Fund was laid down in the trust-deed is as follows It should undertake the preservation, circulation, publication etc of ancient literature pertaining to the Śvetāmbara Mūrtipūjaka sect of Jaina religion, written in any language—Sanskrt, Prākrt, Apabhraṁśa, Pāli, Gujarātī, English, German &c It was also laid down that no work composed after V S 1950 should be considered ancient, and the books published should be sold at half the cost price

Śeṭha Keśarīcanda Rūpacanda resigned in 1916 and Śeṭha Naginabhāī Ghelābhāī expired in 1921 Śeṭha Amaracanda Kalyāṇacanda and Śeṭha Nemacanda Abhecanda were appointed as trustees in their stead in 1926 Mr Gulābacanda died in 1927 and Śeṭha Fulacanda Kasturacanda resigned in 1928 Hence Mr Nemacanda Gulābacanda Devacanda and Śeṭha Hīrābhāī Manchubhāī were appointed in 1929 as trustees in their place In 1929 an appointment-deed was got executed for the appointment of the said four new trustees Śeṭha Amaracanda Kalyāṇacanda expired in 1932 Hence Śeṭha Sakaracanda Khuśālacanda was

nominated for the place in 1936, and an appointment-deed to that effect was got executed in the same year. In 1937 I tendered my resignation, and after some delay it was accepted. Thereupon the trustees appointed me the Honarary General Secretary of this Fund.

Since the establishment of this institution, its funds were invested in the Government Securities. But since we bought a building situated at Kālabādevī Road, Bombay, in V. S. 1993, the said fund is mainly invested in that immovable property. This building is renamed as follows:

SEṬHA DEVACAṆDA LĀLABHĀĪ JAINA PUSTAKODDHĀRA FUND ESTATE (SURAT)

**ĀGAMODDHĀRAKA**

*Here the first line indicates the ownership, while "Āgamoddhāraka" the name of the building.*

*Topiwālā Chawl, Sandhurst Road, Bombay, 4*
*Thursday, 7th August, 1941*
*S'rāvaṇ S'ud 15, 1997*

JIVANCHAND SAKERCHAND JAVERI
*Hon. Secretary*

ॐ अर्हं नमः ।

श्रीवर्द्धमानाय नमो नमोऽस्तु, नमो नमः श्रीगुरुगौतमाय । दादेति नाम्ना जनपूजिताय, नमस्तथा सद्गुरुमोहनाय ॥ १ ॥

श्रीमदकब्बरसुरत्राणमुपदिश्याऽऽषाढीयाष्टाहिकाऽमारिप्रवर्तापकाणां क्रियोद्धारकरणेन समादृतकठोरवरसाधुक्रियाणां-श्रीसाहिदत्तयुगप्रधानपदधारकाणां-श्रीजिनचन्द्रसूरीश्वराणां साम्राज्यवर्त्ति-पाठकावतंस श्रीक्षेमराजगणिशिष्य-वाचकवर्यश्रीमत्प्रमोदमाणिक्यगणिवरान्तेवासि-वादिगजकेसरि-महोपाध्यायश्रीजयसोमगणिशिष्यरत्न-सम्बोधसप्ततीन्द्रियपराजयशतकरघुवंशवृत्त्याद्यनल्पग्रन्थसौधसूत्रणसूत्रधार-श्रीसाहिसमक्ष-प्रदत्तवाचनाचार्यपदविभूषित-श्रीमद्गुणविनयगणिवरसङ्कलितया व्याख्यया समलङ्कृतं पूर्वसूरिप्रवरविनिर्मितम्

# वैराग्यशतकम् ।

प्रणम्य श्रीधरं पार्श्वं, पूर्वसूरिविनिर्मितम् । वैराग्यशतकं सम्यग्, विवृणोमि यथामति ॥ १ ॥

तत्राऽऽद्यगाथेयं—

संसारंमि असारे, नत्थि सुहं वाहिवेयणापउरे । जाणंतो इह जीवो, न कुणइ जिणदेसियं धम्मं ॥ १ ॥

व्याख्या—'असारे' अप्रधाने, 'संसारे' चातुर्गतिकरूपे, तत्त्ववृत्त्या प्रायो वा किञ्चिदपि 'सुखं' सातवेद्यं कर्म, 'नास्ति'

न विद्यते, असारत्वे कारणमाह–यतः किम्भूते संसारे[1], व्याधिश्च–शरीरमन्दता, वेदना च–मानसं दुःखं, ताभ्यां 'प्रचुरे' बहुले, अस्मिन् संसारे केवलं जन्तूनां व्याधिवेदने एव विद्येते एवं जानन्नपि 'इह' संसारे, 'जीवः' प्राणी, प्राग्रमपि जिनैस्तीर्थकृद्भिः 'देशितं' उपदिष्टं, 'धर्मं' दुर्गतौ पततः प्राणिनो धरतीति धर्मस्तं, 'न करोति' न विधत्ते, कर्मबहुलत्वादिति ॥१॥

अज्जं कल्लं परं परारिं, पुरिसा चिंतंति अत्थसंपत्तिं । अंजलिगयं व तोयं, गलंतमाउं न पिच्छंति ॥ २ ॥

व्याख्या–अद्यादिपदेषु प्राकृतत्वादनुस्वारः, 'पुरुषाः' मूढा नराः, अद्य दिने 'कल्ये' आगामिदिने, 'परस्मिन्, आगामिवर्षे 'परारिं' परस्मिन् वर्षे (वा) 'अर्थसम्पत्तिं' द्रव्यसम्पदं–अर्थसम्प्राप्तिं वा, 'चिन्तयन्ति' विचारयन्ति, यथाऽद्य दिने द्रव्यसम्पद् भविष्यति कल्ये वा परस्मिन् वा परारिं वा भविष्यति, इत्येवमाशाग्रस्तास्तिष्ठन्ति, परं ते 'अञ्जलिगतं' अञ्जलिमाप्तं, 'तोय मिव' जलमिव, 'गलत्' क्षरत्, आयुः 'न पश्यन्ति' न प्रेक्षन्ते–न विचारयन्ति, यथाऽञ्जलिगतं तोयं न कमपि कालं तिष्ठति तथेदमायुरपि क्षणे क्षणे आवीचिमरणेन क्षीयमाणं कियन्तं कालं स्थास्यतीत्येवं मूढत्वान्न जानन्तीति भावः ॥२॥

---

1 "तत्र वीचिर्विच्छेदस्तदभावादवीचि[रादेवमावीचि]स्तेन मरणम[आ]वीचिमरणं, तत्प्रभा–द्रव्य १ क्षेत्र २ काल ३ भव ४ भाव ५ भेदात् । तत्र यन्नारकतिर्यग्नरामराणामुत्पत्तिसमयात्प्रभृति निजनिजायुःकर्मदलिकानामनुसमयमनुभवनाद् विचटनं तद् द्रव्यावीचिमरणं, तच्च नारकादिगतिचातुर्विध्याच्चतुर्विधम् । एवं नरकादिचतुर्गतिविषयक्षेत्रप्राप्त्यपेक्षया क्षेत्रावीचिमरणमपि चतुर्द्धैव । देवादिप्रायोग्याकालस्यासम्भवाद् देवाऽऽयुष्ककालादिचतुर्भेदप्राप्त्यपेक्षया कालावीचिमरणमपि चतुर्विधम् । एवं देवादिचतुर्विधभवापेक्षया भवावीचिमरणं चतुर्धा । तथा देवादीनां चतुर्विधायुःक्षयलक्षणभावप्राप्त्यपेक्षया भावावीचिमरणमपि चतुर्द्धैवेति" उत्तराध्ययनसर्वार्थसिद्धिवृत्तौ ११५ पत्रे खरतरगच्छगणनायकनभोमणय श्रीकमलसंयमोपाध्यायपादाः ।

जं कल्ले कायवं, तं अज्जं चिय करेह तुरमाणा । बहुविग्घो हु मुहुत्तो, मा अवरण्हं पडिक्खेह ॥ ३ ॥

व्याख्या–हे प्राणिनः ! यत् 'कल्ये' आगामिदिने, कर्तव्यं धर्मकरणीयमिति गम्यते, तद्धर्मकरणीयं 'त्वरमाणाः' विलम्बमकुर्वन्तः सन्तः 'चिय' शब्दस्य एवकारार्थत्वादद्यैव कुरुध्वं, यतो 'हु' निश्चये, 'वहवः' प्रचुरा, 'विघ्ना' अन्तरायाः सन्त्यस्मिन्निति बहुविघ्न एव 'मुहूर्त्तः' कालविशेषः, अतो मा 'अपराह्णं' सायन्तनसमयं, 'प्रतीक्षध्वं' विलम्बध्वं, "श्रेयांसि बहुविघ्नानी"ति वचनात् पुण्ये कर्मणि प्रवर्तमानानां पुंसां बहवोऽन्तराया उत्तिष्ठन्त्यतो धर्मकर्मविधाने मा विलम्बं कुरुध्वमिति, तथा च वेदेऽप्येवमेवोक्तं "न श्वः श्वः समुपासीत्, को हि मनुष्यस्य श्वो वेदेति" ॥ ३ ॥

ही !! संसारसहावं, चरियं नेहाणुरागरत्ता वि । जे पुव्वण्हे दिट्ठा, ते अवरण्हे न दीसंति ॥ ४ ॥

व्याख्या–मकारोऽलाक्षणिकः, संसारस्वभावस्य 'चरितं' आचरणं, संसारस्वभावचरितं दृष्ट्वा 'ही' इति विषादो मम, कथं विषादः ? इत्याह–'स्नेहानुरागेण' प्रेमबन्धेन रक्ता अपि, आसतामन्ये, ये स्वजनादयः 'पूर्वाह्णे' प्रातःकाले, दृष्टास्त एव 'अपराह्णे' सन्ध्यायां न दृश्यन्ते, स्नेहानुरागरक्तानां किल वियोगासंभवात्त एवोक्ताः, परं संसारस्य क्षणदृष्टनष्टत्वात्तेऽपि वियुज्यन्त इति भावः ॥ ४ ॥

मा सुयह जग्गियव्वे, पलाइयव्वंमि कीस वीसमह ? । तिण्णि जणा अणुलग्गा, रोगो अ जरा अ मच्चू अ ॥५॥

व्याख्या–भो लोका ! जागरितव्ये–धर्मकर्मणि कर्तव्ये इति भावः, तत्र 'मा स्वपिथ' मा शेध्वं, न प्रमादितव्यमिति

किं मानं कथञ्च शेषेन्द्रियाक्षरलाभो न मतिरित्याशङ्कायामाह—

दव्वसुअं" इत्युक्तं तत्र तस्य द्रव्यश्रुतत्वे किं मानं कथञ्च शेषेन्द्रियाक्षरलाभो न मतिरित्याशङ्कायामाह— ... **शेषं तु मतिरिष्यते॥ २२ ॥**

**व्यञ्जनाक्षरवद् द्रव्य-श्रुतं लिप्यक्षरं मतम् ॥ भावश्रुतं वर्णलाभः, शेषं तु मतिरिष्यते॥ २२ ॥**

लिप्यक्षरं द्रव्यश्रुतं व्यञ्जनाक्षरवदित्यत्र भावश्रुतकारणत्वात्, इतिहेतुर्गम्यः॥ यदाह—"पत्ताइगयं सुअकारणं ति, सद्दो व्व तेण दव्वसुअं॥ भावसुयमक्खराणं, लाभो सेसं मइन्नाणं ॥१२४॥ [पत्रादिगतं श्रुतकारणमिति शब्द इव तेन द्रव्यश्रुतम्॥ भावश्रुतमक्षराणां, लाभः शेषं मतिज्ञानम्] ननु द्रव्यश्रुतत्वमत्र साध्यम्, तच्च भावश्रुतकारणश्रुतत्वमेवेति हेतुसाध्ययोरभेद इति चेत्, न, भावश्रुतप्रयोजकद्रव्यश्रुतव्यवहारविषयत्वस्यैव साध्यत्वाद्, हेतौ कारणपदस्य नियतान्वयव्यतिरेकप्रतियोगित्वपरत्वाद्वा, ननु भावश्रुतप्रयोजकत्वमात्रं, व्यभिचारि व्यञ्जनाक्षरसाधारणं, परम्परया च न लिप्यक्षरस्य शाब्दज्ञानानुकूलत्वं तादृशानुपूर्व्वीकलिप्यक्षरज्ञानाजन्यतादृशानुपूर्व्वीकव्यञ्जनाक्षरज्ञानोत्तरमेव पदार्थोपस्थित्या शाब्दबोधोदयाद्, न च व्यञ्जनाक्षरेणेव लिप्यक्षरेणाऽपि सममर्थस्य सम्बन्धग्रहात्ततोऽप्याहत्य तदुपस्थितिरिति वाच्यम्, अर्थाव्युत्पन्नानां ततः शब्दस्यैवोपस्थित्याऽन्यत्रापि तदुपस्थितिद्वारैव तस्यार्थोपस्थापकत्वात्, साधुत्वाद्यभावेन तस्य शाब्दबोधाहेतुत्वाच्चेति चेत्, न, व्यञ्जनाक्षरादिव लिप्यक्षरादपि पट्वाकलितसङ्केतानां झटित्येवार्थोपस्थितेः, साधुत्वस्य सर्वत्रातन्त्रत्वादर्थोपस्थितिकारणतत्कारणसाधारणप्रयोजकत्वस्यैव वा व्यवहारानुकूलत्वात्सम्प्रदायभङ्गस्य विपक्षबाधकतर्कत्वादित्याद्यूहनीयम्, लब्ध्यक्षरं तु श्रुतानुसारित्वात्, भावश्रुतं न मतिरिति शेषं मतिज्ञानमिति सुव्यवस्थितम्॥ आह च—"भावसुअमक्खराणं लाभो सेसं मइन्नाणं॥" [भावश्रुतमक्षराणां लाभः शेषं मतिज्ञानम्॥] त्ति ॥२२॥ ननु यदि शेषाक्षरलाभोऽपि श्रुतं तर्हि श्रुतं श्रोत्रेन्द्रियोपलब्धिरेवेत्यवधारणं भग्नमित्यत आह—

श्रुतत्वं न जहात्येव, लब्धिरक्षरगर्भिणी ॥ श्रोत्रेन्द्रियोपलब्धिः सा, यतो योग्यतया स्मृता ॥ २३ ॥

शेषेन्द्रियद्वारकज्ञानेऽपि प्रतिभासमानमक्षरं श्रोत्रेन्द्रियोपलब्धियोग्यमिति श्रोत्रेन्द्रियोपलब्धिरेव तत् । आह च–"जइ सुअमक्खरलाभो, न णाम सोओवलद्धिरेव सुअं ॥ सोओवलद्धिरेवक्खराइं सुइसम्भवाओ" त्ति ॥१२५॥ ॥ [यदि श्रुतमक्षरलाभो न नाम श्रोत्रोपलब्धिरेव श्रुतम् ॥ श्रोत्रोपलब्धिरेवाक्षराणि श्रुतिसंभवादिति]॥२३॥ नन्वेवं द्रव्यश्रुतस्योपलब्धिविषयस्य तथात्वसमर्थनेऽप्यक्षरोपलब्धेस्तथात्वमसमर्थितं न खलु सापि श्रोत्रग्रहणयोग्या, न चाभिलापस्य तथात्वे तदाकारपरिणतज्ञानस्यापि तथात्वम्, परिणामपरिणामिनोः सर्वथैकत्वाभावात्, एवं सति केवलबहुश्रीलाध्ययणप्रसङ्गाच्च, इति चेत्, उच्यते–शेषाक्षरलाभोऽपि श्रुतानुसारितया सङ्केतग्रहमपेक्षमाणः साक्षात्परम्परया वा तदनुकूलां श्रोत्रजन्यां पदधियमुपजीवतीति श्रोत्रद्वारिकोपलब्धिरेव सा, न चेन्द्रियान्तरमपि तत्र द्वारमित्यवधारणानुपपत्तिः, श्रोत्रद्वारकत्वव्याप्त्यैरेव तत्फलत्वादस्मादेवावधारणादिन्द्रियविभागः सङ्गच्छते, अन्यथा द्वयोरपि मतिश्रुतयोः सर्वेन्द्रियापेक्षाया अविशेषादित्याशयेनाह–

अवधारणमाश्रित्ये–न्द्रियभेदोऽपि युज्यते ॥ उपेक्ष्यमेव व्याख्यान–मतो निरवधारणम् ॥ २४ ॥

तथाविधविरुद्धधर्माध्यासलक्षणभेदोपयिकाऽवधारणेनैव हि मतिश्रुतयोरिन्द्रियभेदो युज्यते, विनाऽवधारणं तदलाभात्, अथ श्रुतं श्रोत्रोपलब्धिरेवेति सावधारणव्याख्याने शेषाक्षरलाभासङ्ग्रहेणाऽनन्वयात् श्रोत्रोपलब्धिपदस्य तद्योग्यत्वार्थकतया 'अक्खरलंभोसेसेसु' इत्यभिधानानुपपत्तेः, न च तत्रोत्सर्गव्याप्तं मतित्वमपोदितुं तदभिधानं, प्रथमार्थानुपपत्तेः, न चाक्षरलाभे श्रुताभेदान्वयादेव तदपवादो, वाक्यभेदप्रसङ्गात्, न च द्वितीयार्थे एवेयं प्रथमा, अक्षरलाभपदस्य श्रुतानुसार्यक्षरलाभपरतया द्रव्यश्रुत इव तत्रापि

मुक्त्वेत्यन्वयसम्भवेऽप्यप्रामाणिकाविभक्तिव्यत्ययकल्पनानौचित्यात्, तस्मान्निरवधारणव्याख्यानमेव सम्यक् फलतोऽवधारणला-
भाच्चेन्द्रियविभागोपपत्तिरिति चेत्, न, एकाऽवधारणलाभेऽन्यभजनाशङ्कया तदभिधानात्, अत एवोभयाव्यभिचारस्थलेऽपि निय-
मद्वयाभिधानं तत्र तत्रोपवीक्ष्यते ॥२४॥ ननु यदि शेषाक्षरलाभः सर्वोऽपि श्रुतं तर्हि अवग्रहरूपैव मतिः स्यात्, इत्यत आह–
भावः श्रुताक्षराणां यः, स एव श्रुतमिष्यते । ईहादयो मतेर्भेदा, नोच्छिद्येरन् कुतोऽन्यथा ॥ २५ ॥
यदि सर्वोऽप्यक्षरलाभः श्रुतं तर्ह्यक्षरानुविद्धा ईहादयोऽपि श्रुतरूपा एव प्रसज्येयुरित्यवग्रहैकमूर्तिरेव मतिः पर्यवस्येत्, तस्माच्छ्रुता-
नुसार्यक्षरलाभ एव श्रुतमिति ॥ आह च–" सोऽवि हु सुअक्खराणं, जो लाभो तं सुअं मई सेसा ॥ जइ वा अणक्खराणिअ,
सा सव्वा ण प्पवत्तेज्जा॥१२६॥" [सोऽपि खलु श्रुताक्षराणां यो लाभस्तच्छ्रुतं मतिः शेषा ॥ यदि वाऽनक्षरेव, सा सर्वा न प्रवर्तेत] इत्यं
व्याख्याता 'सोइंदिओवलद्धीति' पूर्वगतगाथा ॥२५॥ अथाग्रिमपूर्वगतगाथासम्बन्धाय " दव्वसुअं भावसुअं, उभयं वा किं कहं
व होज्जत्ति॥ को वा भावसुअंसो, दव्वाइसुअं परिणमेज्ज ॥१२७॥ " [ द्रव्यश्रुतं भावश्रुतं, उभयं वा किं कथं वा भवेदिति॥ को वा
भावश्रुतांशो द्रव्यादिश्रुतं परिणमेत ] त्ति ॥ भाष्योक्तां सङ्गतिमनुवदति ।
द्रव्यभावश्रुते युग्मं, किं कथं वा भवेदिति ॥ कियान् भावश्रुतस्यांशो–द्रव्यादीन्यनुभाषते ॥ २६ ॥
द्रव्यश्रुतं भावश्रुतमुभयश्रुतं वा किं कथं च तद्भवेत्कियान्वा भावश्रुतस्य भागो द्रव्यश्रुतमुभयश्रुतं चेत्यनुभाषितुमिमां गाथा-
माह–पूर्वगतप्रणयनप्रवणः–"बुद्धिदिट्ठे अत्थे, जे भासइ तं सुअं मईसहिअं ॥ इयरत्थवि होज्ज सुअं, उवलद्धिसमं जइ भणेज्जा
॥१२८॥[बुद्धिदृष्टेऽर्थे यान्भाषते तत्श्रुतं मतिसहितम् ॥ इतरथापि भवेत् श्रुतं, उपलब्धिसमं यदि भणेत्] ॥२६॥ इमामेव व्याचष्टे–

बुद्ध्या बुद्धिगतानर्थान्, वदतो ह्युभयश्रुतम् ॥ द्रव्यतोऽनुपयुक्तस्य, भावतो जानतः परम् ॥ २७ ॥

बुद्ध्या दृष्टानर्थान् मतिसहितान् यान् भाषते तद्द्रव्यभावलक्षणमुभयश्रुतम्, अत्र बुद्धिशब्दो मतिशब्दश्च श्रुततात्पर्यकः, निरूपणप्रयोजकविवक्षारूपज्ञानस्य प्रयोगसमकालीनोपयोगस्य च मतिरूपस्यासम्भवात्, उभयत्वं चाऽत्र प्रयोगोपयोगाभ्यां बोध्यम्, न तु विवक्षया, तया मर्हैकविशिष्टपरत्वरूपोभयत्वासम्भवात्, अनुपयुक्तस्यैव वदतो द्रव्यश्रुतम्, अथानुपयुक्तस्यैव प्रयोगो भवति नोपयुक्तस्य, प्रयोगकाल एव तदधीनार्थोपयोगस्यासम्भवात्, तथा च कथमयं विभाग इति चेत्, न, सोपयोगप्रयोगाभिधित्सया केवलप्रयोगाभिधित्सया च प्रयोगद्वैविध्यसम्भवात्वर्णाद्यादिपुञ्छिकज्वालादृष्टान्तेनैव योपयोग इति व्यक्तमध्यात्ममतपरीक्षायाम्, तदिदमाभिप्रेत्याह–"जे सुअबुद्धिदिट्ठे सुअमइसहिओ पभासई भावे॥ तं उभयसुअं भण्णइ, दव्वसुअं जेउ अणुवउत्तो॥१२९॥"[यान् श्रुतबुद्धिदृष्टान्, श्रुतमतिसहितः प्रभाषते भावान्॥ तदुभयश्रुतं भण्यते, द्रव्यश्रुतं यांस्त्वनुपयुक्तः] अत्राभासमाणस्यैव श्रुतबुद्ध्या पर्यालोचयतस्तु भावश्रुतमेवेति सामर्थ्यगम्यं, सामर्थ्यं च न तत् भावश्रुतमेवेति साध्ये द्रव्योभयश्रुतभिन्नत्वे सति श्रुतत्वम्, एवकारेण साध्यार्थस्यापि तादृशस्य पर्यवसाने हेतुसाध्याभेदप्रसङ्गात्, किन्तु प्रयोगाकालीनश्रुतत्वमेवेति बोध्यम् ॥ मूले तु श्रुतपदस्योभयश्रुतपरतयाऽनुपयुक्तस्य वदतो द्रव्यश्रुतमेवेत्यपि सामर्थ्यगम्यमेव, एवञ्च द्रव्यश्रुतं भावश्रुतमुभयश्रुतं वा। किं कथञ्च भवेदित्याकांक्षाः पूरिताः ॥२७॥ अथ द्रव्यश्रुतमुभयश्रुतं वा भावश्रुतस्य कियानंश इत्याकांक्षापूरणौपयिकमुत्तरार्धं व्याख्यायते तात्पर्यतः–

केवलश्रुतकालेऽपि, तदाऽऽत्मन्युभयश्रुतम् । भवेद्ध्युपलब्धार्थान्, सर्वान् वक्तुं क्षमेत सः ॥ २८ ॥

" इयरत्थ वि होज्ज सुअं उवलद्धिसमं जइ भणिज्जा ॥१२८ ॥" इत्यस्यायमर्थः, इतरत्र भावश्रुते, भवेद्द्रव्यश्रुतमुभयश्रुतं वा, यद्युपलब्धिसमं भणेत् प्राकृतशैल्या सहस्य समभावनिपातनात्समशब्दस्य तुल्यार्थकत्वात्समकालार्थकत्वाद्वोपलब्ध्या सहोपलब्धितुल्यमुपलब्धिसमकालं वा भणेद्, अत्राद्यन्तयोः सहभावयौगपद्ययोः सामान्येन ग्रहणादीप्सितार्थसिद्धिः, तदिदमाह–" इयरत्थवि भावसुए, होज्ज तयं तस्समं जइ भणिज्जा ॥ ण य तरइ तत्तियं सो, जमणेगगुणं तयं तत्तो ॥१३०॥"[इतरत्रापि भावश्रुते, भवेत्तत्तत्समं यदि भणेत् ॥ न च तरति, तावत्सः यदनेकगुणं तत्ततः ] " सह उवलध्धीए वा, उवलब्धिसमं तया व जं तुल्लं ॥ जं तस्समकालं वा, ण सव्वहा तरइ वोत्तुं जे ॥१३१॥"[सहोपलब्ध्या वोपलब्धिसमं तदा वा यत्तुल्यम् ॥ यत्तत्समकालं वा न सर्वथा तरति वक्तुम्] एवञ्च द्रव्यश्रुतादुभयश्रुताच्चानन्तगुणं भावश्रुतं प्राप्तमिति सम्प्रदायः ॥ न चैवं व्यक्तीभविष्यति चेदमुपरिष्टात्, भावश्रुते द्रव्यश्रुतमप्रसक्तमिति सूत्रे श्रुतपदं प्रागुक्तश्रुतपदसमानार्थकमुभयश्रुतपरमेव, न चैकविशेषे विशेषान्तरमापादनार्हमिति, इतरत्रेत्यस्य तच्छब्देन तस्य परामर्शो युज्येत, सूत्रकृतांगतेर्विचित्रत्वात्, केवलभावश्रुतोत्पत्तिकाल इत्यर्थः । एवञ्च तदा भावश्रुतसामग्रीसत्त्वेऽपि द्रव्यश्रुतसामग्र्यभावादुभयश्रुताभावो, न ह्युभयमतिरिक्तमस्ति, प्रत्येकातिरिक्तसमुदायाभावादित्येतत्तात्पर्यम् ॥२८॥ अथाऽत्र केषाञ्चिन्मतिश्रुतभेदोपयिकं पूर्वार्द्धव्याख्याकौशलमपहस्तयितुमुद्भावयति–

मत्या सह तया दृष्टान्, ब्रुवतो ह्युभयश्रुतम् ॥ द्रव्यतोऽनुपयुक्तस्य, तदेकालोचनं मतिः ॥ २९ ॥

' बुद्धिदिट्ठे ' इत्यत्र बुद्धया मत्या दृष्टेष्वर्थेषु मध्ये अत्र ' वर्णेषु क्षत्रियः शूर ' इत्यत्रेव मध्यार्थे सप्तमी, एकवचनं बहु-

वचनार्थकं जात्यभिप्रायकं वा, बुद्ध्या मत्या दृष्टान् यानर्थान् मतिसहितान् भाषत इति सम्मुखीनैव व्याख्या, तच्छ्रुतमुपयोग-प्रयोगाभ्यामुभयश्रुतं भवति। ननु मतिसाहित्यं कथमर्थानां विशेषणमनन्वयादिति चेत्, अत्राहुः-मईसहियमित्यत्र मत्युपयोगे वर्तमानस्य वक्तुर्ग्रहणात्, तस्य मत्युपयोगसाहित्येनार्थानामपि तदुपचर्यत इति। अत एवाह-"केई बुद्धिदिट्ठे, मइसहिए भासओ सुअं ति॥"[केचिद् बुद्धिदृष्टान् मतिसहितान्भाषमाणस्य श्रुतम् ॥] इदं च भाष्यानुरोधादुक्तम्, सूत्रे तु मइसहियमित्यत्र मतिसाहित्यस्य क्रियाविशेषणत्वलाभान्मत्युपयोगसहितम्, मतिदृष्टार्थभाषणं श्रुतमिति सम्मुखोऽर्थ एव युक्तो, नहि मतिसाहिता भाष्यमाणा अर्थास्तत्, अपि तु तादृशः शब्द इति ॥ अत एवाह-तत्साहितं यथा भवत्येवं यान् भावान् भाषते इति अनुप-क्तस्यैव वदतो द्रव्यश्रुतं, अभाषमाणस्य पदार्थमात्रपर्यालोचनं तु मतिः,इति मतिश्रुतयोर्भेद इति ॥२९॥ तदेतद्दूषयति—

केचिदाहुरिदं, तन्नो, युक्तं भावश्रुतव्ययात् ॥ नाधिक्यं नान्यथात्वं वा, भाषाव्यापारतो मतेः ॥ ३० ॥

तदिदं व्याख्यानमयुक्तं भावश्रुतोच्छेदप्रसङ्गात्, नहि प्रयुज्यमानः शब्दो मतिज्ञानं वा तद्, अत एव नोभयं प्रत्येकाभावे समुदायाभावात्, आह च-"तत्थ ॥ किं सदो मइउभयं, भावसुअं सव्वहाऽजुत्तं ॥१२२॥ [तत्र किं शब्दो मतिरुभयं, भाव-श्रुतं सर्वथाऽयुक्तम् ]" सद्दो ता दव्वसुअं, मइआभिनि-बोहिअं न वा उभयं ॥ जुत्तं, उभयाभावे भावसुअं कत्थ तं किं वा ॥१२३॥ [शब्दस्तावद्द्रव्यश्रुतं मतिराभिनिबोधिकं नवा उभयं॥ युक्तं, उभयाभावे, भावश्रुतं कुत्र तत्किं वा] न च भाषापरिणति-काले मतेराधिक्यमुपक्षयो वा जायते, न वा भाषारम्भ एवात्र विशेषस्तस्य तत्स्वरूपपराङ्मुखत्वात्, अन्यथा धावनवल्गनादि-क्रियानन्त्यान्मतेरानन्त्यप्रसङ्गात्, अथ द्रव्यश्रुतसामग्र्या एव भावश्रुतसामग्रीत्वान्मतिदृष्टार्थप्रयोगसमानकालीन उपयोगः श्रुतमेव

